श्री राधा-जन्म-महोत्सव

सं० २०१८ के पुनीत अवसर पर प्रकाशित

# श्री राधा सप्तशती

पं० वागीश शास्त्री

श्री राधा-जन्म-महोत्सव वि० सं० २०१८ के
पुनीत अवसर पर प्रकाशित

आर्यावर्त्त प्रकाशन गृह
१०, चौरंगी रोड, कलकत्ता-१३

श्रीश्रीराधिकायै नमः

# श्रीराधा-चरण-वन्दन

यो ब्रह्मरुद्रशुकनारदभीष्ममुख्यैरालक्षितो न सहसा पुरुषस्य तस्य ।
सद्यो वशीकरणचूर्णमनन्तशक्तिं तं राधिकाचरणरेणुमनुस्मरामि ॥

मन्मथ-मन्मथ मन मथत जाके सुषमित अंग ।
मुख-पंकज-मकरंद नित पियत स्याम-दृग-भृंग ॥
जाके अंग-सुगंध कौं नित नासा ललचात ।
तन चाहत नित परसिबौ जाको मधुमय गात ॥
मधु रसमयि बचनावली सुनिबे कौं नित कान ।
हरि के लालायित रहत, तजि गुरुता को मान ॥
जाके मधुर प्रसाद को मधु रस चाखन हेतु ।
हरि-रसना अकुलात अति तजि दुस्त्यज श्रुति-सेतु ॥
जाको नख-दुति लखि लजत कोटि-कोटि रबि-चंद ।
बंदौं तिन [illegible] -पंकज सुचि सुखकंद

# दो शब्द

पूज्य श्री भाईजी (श्री हनुमानप्रसादजी पोद्दार सम्पादक 'कल्याण') तथा पूज्य श्री 'बाबा' (स्वामी श्री चक्रधरजी) के मंगलमय सान्निध्य तथा उनकी कृपापूर्ण छत्रछाया में विगत १६ वर्षों से प्रतिवर्ष मनाये जानेवाले श्री राधा जन्म-महोत्सव के पुनीत अवसर पर श्री राधा-माधव से सम्बन्धित कुछ-न-कुछ साहित्य प्रकाशित होता ही रहा है। प्रस्तुत ग्रंथ उसी परम्परा की प्रसून-माला का एक और पुष्प है।

पूज्यपाद पंडित श्री वागीशजी शास्त्री के प्रस्तुत ग्रंथ की पांडुलिपि प्रकाशन के लिये कई वर्ष पहले ही तैयार हो गयी थी—पर मेरे ही साधनों की अल्पता तथा अपने निज के प्रमादवश इसका प्रकाशन सरकता चला आया; आज मुझे स्वाभाविक प्रसन्नता है कि श्री राधा-जन्म-महोत्सव के इस पावन दिन यह ग्रंथ आपके हाथों में है।

पूज्य श्री चिम्मनलालजी गोस्वामी के परिश्रमपूर्वक प्रूफ देखने तथा ग्रंथ को सांगोपांग बनाने के सुझावों के बावजूद भी इसमें प्रकाशन की त्रुटियाँ तथा संस्कृत के अंश में अशुद्धियाँ रह सकती हैं, इन सारी भूलों का एकमात्र दायित्व मुझ पर है और मुझे आशा है विद्वान पाठकगण मेरी अयोग्यता के लिये क्षमा करते हुए, अशुद्धियों की ओर संकेत करने की कृपा करेंगे ताकि द्वितीय संस्करण के समय उनका परिमार्जन किया जा सके।

ग्रंथ की उपादेयता और सरसता तथा श्री शास्त्रीजी के भक्त-हृदय तथा समन्वयवादी व्यक्तित्व की सहज स्वीकृति, ग्रंथ के अंत में प्रकाशित श्री राधा-भाव के अनन्य-उपासक तथा मर्मज्ञ सम्मान्य महानुभावों की सम्मतियों में आपको प्राप्त होगी। मुझे विश्वास है कि रसिक भक्तगण अपने इष्ट की उपासना की इस अनुपमेय सामग्री से अवश्य-अवश्य लाभान्वित होंगे। मेरी तो, भक्त हृदय पाठकों और राधा-भाव के रसिक उपासकों से मुक्त आशीर्वाद की विनीत याचना है ताकि श्री राधारानी के परम-भक्तों के पुनीत-चरणों में बैठ सकने का सुयोग पा सकूँ।

१०, चौरंगी रोड
कलकत्ता-१३.

—रामनिवास ढंढारिया

# किञ्चित् प्रास्ताविकम्

**मन्दस्मितैरच्युतचित्तचन्दिनीं नित्येक्षणात्तन्निखिलार्तिकन्दिनीम् ।**
**श्रीनन्दनन्दप्रणयाभिनन्दिनीं वन्दामहे श्रीवृषभानुनन्दिनीम् ॥**
**जयन्ति गोविन्दमुखारविन्दे मरन्दसान्द्राधरमन्दहासाः ।**
**चित्ते चिदानन्दमयं तमोऽघ्नममन्दमिन्दुद्रवमुद्गिरन्तः ॥**

विदितचरमेवैतद् भगवद्भक्तिभावितात्मनां चिरंभावुकानां भावुकानां यदखिलजगदन्तरात्मनः परमात्मनः सर्वलोकमहेश्वरस्य महेश्वरस्य सर्वभूतसुहृद सुहृदो नियन्तुरिन्द्रियाश्वानां मन्तुरतीतानागतवर्तमानोपलक्षितस्य कालस्य, अनन्तकोटि-ब्रह्माण्डोदुम्बरफलमालासमलंकृतैकैकरोमकूपस्याप्यधिवृन्दावन-सीममात्रकूपमण्डूकायमानस्य, बल्लवीक्षोमण्डलमण्डनाय महेन्द्रमणिदामायमानस्य, श्रीवृन्दावनवीथीसंचारसंचरणमभ्यर्चितचारुचरणस्य, निजाश्रितजनानुसरणस्याशरणैकशरणस्य, सर्वाश्रयीभूतामृताव्ययपरब्रह्मणोऽपि प्रतिष्ठास्पदस्य, विभोरपि मञ्जुलवृन्दाटवीनिकुञ्जपुञ्जेष्वेवाभिव्यञ्जितमदनोन्मादिमाधुर्य-सौन्दर्य-शालिवनमालिकलेवरस्य, देवरस्य रेवतराजपुत्र्याः, स्वीकृतप्रेयसीदामबन्धाभिरामोदरस्य दामोदरस्य, सोदरस्य सुभद्राया नन्दजायाश्च, चन्दिराननेन्दिरामन्दिरायमाणमहोरस्कस्य, कस्यापि विमोहनशीलललितलीलस्य, वसुधाप्राणबन्धोः, परमानन्दसुधासिन्धोर्निखिलखलमण्डलनिग्रहस्य सच्चिदानन्दघनविग्रहस्य वृन्दारकेन्द्रवृन्दवन्दितपदारविन्दस्य गोविन्दस्य, स्वात्मस्वरूपश्रीराधाराधनपरस्य वरस्य भगवतो वृषभानुनन्दिनीसमभिनन्दनस्य, तदीयमोहनमहामधुराङ्गसङ्गसमुपलब्धनिरतिशयानन्दसमृद्धेर्निखिलजनानन्दनस्य नन्दनन्दनस्य, तत्प्राणवल्लभायाश्च तदभिन्नात्मनस्तस्यैव संह्लादिशक्तेः, परं सीमानमुपगतायाः परमानुरक्तेः, निजनखचन्द्रज्योत्स्नावितायमानमानातीतनित्यनिरतिशयानन्तपरब्रह्मापरपर्यायानिर्वाच्यचिन्मयप्रकाशायाः, कदापि क्रीडाचञ्चलनिजाञ्चलसमीरणसंजातसमीरणसंस्पर्शेनापि योगीन्द्रदुर्गमगति देवाधिदेवमूर्धन्यतमं माधवमपि धन्यातिधन्यतमं विधातुं पारयन्त्याः, श्रुतेरपि श्रुतिपदवीमनुपगतवत्याः, ब्रह्मादिदेवदुरूहदिव्याद्भुतवैभवसमहायाः, निजप्राणनाथप्रणयैकजीवनधनाया निरस्तसाम्यातिशयसौन्दर्यसौशील्यसौकुमार्यौदार्यमाधुर्यलावण्यवैदग्ध्यप्रभृतिविविधगुणगणवन्यधन्यायाः, स्वकीयसौन्दर्यसिन्धुतिरस्कृतशतकोटिसतीपद्मपद्मायाः, विश्वविमोहनमोहनमोहनैकहृद्यविद्यायाः, सततमनोऽभिरामश्यामसुन्दरश्रीकृष्णसम्बन्धसमध्यमाननिःसीमानन्द[illegible]ाद

दिव्य

दाम्पत्यसमुद्भूतलीलाविलासोल्लसितरससिन्धुसमुपबृंहणार्थं तत्संकल्पकल्पितमेवेदं निखिलं दिव्यमदिव्यं जंगमाजंगमं जगदिह पादविभूतावुपलक्ष्यतेऽतितरां नितराम्। तथा च श्रुतिः—'स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्। स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधापातयत् ततः पतिश्च पत्नी चाभवताम्।......ततो मनुष्या अजायन्त।......एवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत।' (बृह० उप०)

'त्रिपादस्यामृतं दिवि' इति श्रुतिनिर्दिष्टमभीष्टं परमव्योमवैकुण्ठसाकेत-गोलोकाद्यभिधाभिरभिधीयमानमप्राकृतं नित्यं सच्चिदानन्दघनं यदमृतं धाम त्रिपाद-विभूतितया व्यपदिश्यते, तदपि तयोरेवानादिदम्पत्योः स्वरूपाव्यतिरिक्तं तदीय-लीलाविलासार्थं तत्संधिनीत्यभिहितशक्तिवैभववितानमिव भगवत्या योगमायया-घटितघटनापटीयस्या प्रतिक्षणं सुसज्जीक्रियमाणं तयोः क्रीडारङ्गस्थलमेवा-नवरतं राजतेतराम्। नवनवलीलास्थलविशेषप्रादुर्भावतिरोभावनूतननिर्माण-पुरातनपरिवृत्त्यादियुतं तत्रत्यमविकलं व्यवहारजातमपि नित्यप्रेयसोर्नित्यमनः संकल्पकल्पितं सदुपादानकत्वान्नित्यमेवाभिधीयते धीयते च तथैव हृदि ध्येयरूपतया भावुकैरिति सर्वं निरवद्यमेव।

ततश्च सच्चिदानन्दसंदोहदेहयोः श्रीप्रियाप्रियतमयोर्मङ्गलवपुषोः पादविभूतौ त्रिपादविभूतौ च यत्किंचित् क्वचित् कर्हिचित् सम्पद्यते तदशेषमेव तदीयविशेष-मङ्गलविधानानुरूपमिति परमं मङ्गलमेव। लीलाविलसितत्वादेव च तत्र वैषम्यनैर्घृण्यादिदोषोद्भावनमेव नोपपद्यते कुतः समाधानम्। न हि नाटकादिषु वैषम्यनैर्घृण्यादिमयव्यवहाराभिनयं निरीक्ष्यापि सहृदयैस्तत्र दूषणमुद्भाव्यते, प्रत्युताभिनयसाफल्यमालोच्य रस एवास्वाद्यते सुधीभिः। करुणदृश्येष्वश्रुपाता-द्यनुभावो दुःखव्यञ्जकोऽपि शोकस्थायिभावतया करुणाख्यं रसमेव पोषयति पर्यवसाने। अत एव सामाजिकानां सम्यञ्चमभिनयं सुप्रशंसमानाः प्रमातारो मध्ये मध्ये दुन्दुभिनिर्विशेषं तलध्वनिं दंध्वन्यन्ते प्रहर्षातिरेकेण।

एवमेव ये जगदिदमत्रत्यं व्यवहारजातं चाखिलं प्रेयसोर्लीलाविलसितमेव मन्यन्ते ते तु न पराभवपदैर्हर्षशोकैः पराभूयन्ते परमं प्रमोदभरं चापूरयन्ति मानसे। ये खल्वनादिकर्मवासनावासितत्वान्मलादिमलीमसमनसस्त्रिगुणात्मकमायाबन्धन-मुपेतास्त एवाहंताममतामूलकरागद्वेषादिदोषैराच्छन्नहृदयाः सन्तो हर्षाहर्षप्रकर्षा-दिभिर्विविधैर्विकारजातैर्भूयो भूयोऽभिभूयन्ते। तेषामेव च कृते 'वैषम्यनैर्घृण्ये-नेत्यादिब्रह्मसूत्रोपपादितं समाधानं संगच्छते। तथा हि प्राणिनां पुरातनानि शुभाशुभकर्माण्यनुसृत्यैव तेषां सुखदुःखात्मकफलोपभोगव्यवस्थावस्थाप्यते परमे-श्वरेण। अतो न तस्मिन् किञ्चिद् वैषम्यं नैर्घृण्यं वाऽऽरोपणीयम्। न च कल्पान्ते सकलस्यैव

च प्रलीनत्वात्

कर्मविभागासम्भवेन कर्मानुसारिणी फलभोगव्यवस्था नोपपद्यत इति वाच्यमनादित्वात् कर्मप्रवाहस्य। तस्मान्मङ्गलवपुषो भगवतो निखिलमपि विधानं परममङ्गलायैवेति निश्चयं मत्वा चेतनश्चेतसि सततं संतुष्येदेव।

अनाद्यनेहसो मायाबन्धनमुपेत्य प्रारब्धपरिणतिं भोजं भोजं भगवतो दूरमिवापतितानां भवसिन्धुनिपतितानां प्राणिनां समुद्धाराय मोक्षाय भगवत्सांनिध्यसौख्यसमुपलब्धये वा यद्यपि शास्त्रेषु विविधानि साधनधनानि संचितानि, तथापि 'तरति शोकमात्मवित्' तमेव विदित्वातिमृत्युमेति', 'ऋते ज्ञानान्न मुक्तिः', 'यमेवैष वृणुते तेन लभ्यः', 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते', 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इत्यादि नैकविधश्रुतिस्मृतिवचनप्रमाणैरशरणशरणभगवच्चरणयोरनुसरणं तच्छरणवरणमेव वा श्रेयस्सरणिरिति निश्चीयते, चीयते चैषा प्रपत्तिरेव प्रायेण सचेतनैश्चेतनैः।

भगवति वात्सल्यं स्वामित्वं सौशील्यं सौलभ्यमिति गुणचतुष्टयं चक्षुर्गोचरतामानीय सोत्साहं भगवन्तं प्रपद्यन्ते प्रत्यगात्मानः। ज्ञानं शक्तिः प्राप्तिः पूर्तिश्चेति चत्वारो गुणा अपि परमात्मन्येव विलसन्ति। भगवत एवाखिलप्रपञ्चगताना प्राणिनामिष्टानिष्टयोः सम्यग्ज्ञानं नान्यस्य कस्यापि। इष्टसाधनमनिष्टनिरसनमपि तदायत्तमेव तत्रैवाघटितघटनापटीयःशक्तेः सद्भावात्। स एवावाप्तसमस्तकामत्वात्प्रत्युपकृतिमनिच्छन्नेवोपकरोति निरन्तरं निरन्तरायं नरान्। स एव च जनवत्सलो भगवान् सर्वेषां प्राणिनां हृदयगुहामधिशेते यतो जीवा नान्यत्रानुसधातुं भवाटवीस्वटेयुः। अतोऽसौ समेषां सततं प्राप्त एव, परंतु पराङ्मुखत्वान्न प्रभवन्ति प्राणिसमुदायास्तत्संगमसुखं समास्वादयितुम्। प्रपद्यमाना एव मानवाः परमात्मतत्त्वमनुभवन्ति परमात्मन्येवानुरज्यन्ति विरज्यन्ति चान्यतो यथोक्तं कविना—

**भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः।**
**प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम्॥** इति॥

परमानन्दसुधासिन्धोस्तरङ्ग रूपत्वाज्जीवात्मानोऽपि परमानन्दस्वरूपा एव वेद्याः। अतएव ते सुखापरपर्यायमानन्दमेवाधिगन्तुमिच्छन्त्यानन्दमेवोपजीवन्ति च। तथा च श्रुतिः—एतस्यैवानन्दस्य मात्रामुपजीवन्ति, परमानन्दसुधासिन्धुरसौ 'रसो वै सः', 'विज्ञानमानन्दं ब्रह्म', 'आनन्दमयः' 'सैषाऽऽनन्दस्य सीमा', 'एष ह्येवानन्दयति' 'पुरुष एवेदं सर्वम्' इत्यादि श्रुत्या निर्दिश्यमानः, सच्चिदानन्दघनपुरुषोत्तमो रसिकशेखरः श्रीकृष्ण एवेति विज्ञायते, रसराजस्वरूपत्वात् परमानन्दप्रदत्वाच्च। तदेव वक्ति भगवती श्रुतिः—**'यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्' 'कृष्णस्तु भगवान् स्वयम्' इत्यादिना**

एतस्यैव भगवतः सौन्दर्यमाधुर्यसिन्धोः श्रीकृष्णस्यात्मभूता तत्सारतमस्वरूपा तदाह्लादिनी शक्तिर्निस्सीमसौन्दर्यमाधुर्यसारसर्वस्वमूर्तिः श्रीमती राधा नाम या सततं समाराध्यते प्रेयसा। तथा चोक्तं राधिकोपनिषदि—'श्रीकृष्णेनाराध्यत इति राधा।' 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ', 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादि-श्रुतयः 'निरस्तसाम्यातिशयेन राधसा', 'अनयाऽऽराधितो नूनम्' इत्यादिश्रीशुकोक्तयश्च तामेव संस्तुवन्ति निर्दिशन्ति च। तथा निजात्मभूतया श्रीराधया सह स्वधामनि ब्रह्मणि व्रजाख्ये निरन्तरं रमणादात्माराम इत्युच्यते श्यामसुन्दर। एतदेवोच्यते—आत्मा तु राधिका तस्य तयैव रमणादसौ। आत्माराम इति प्रोक्तो रसरीतिविचक्षणैरित्यादिना। एतयोर्नित्यनूतनयोरनादिदम्पत्योर्महाभाव-रसराजरूपयोः सेवासौभाग्यसमुपलब्धिरेव परमः पुमर्थोऽङ्गीक्रियते। श्रीभानु-नन्दिनीप्रणयाभिनन्दनमुपेत्यैव नन्दनन्दनो जगदानन्दनो भवितुमर्हति।

तयोर्नानाविधा रससंवर्धिनी मधुरतमा लीला नित्यं निरन्तरं सम्बोभवीति। सा च श्रवणस्मरणगोचरतामुपेत्य विस्मृतात्मनां देहिनां स्वरूपसंस्मारणपूर्वकं प्रेयोयुगलसेवा, सौभाग्यसम्पादनार्थमेवेति कृपापरवशाभ्यामेव प्रेष्ठाभ्यामनवरत-मातन्यते। तथा चोक्तं कुन्तीदेव्या—

**'भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः।**
**श्रवणस्मरणार्हाणि करिष्यन्निति केचन॥' इति।**
**'शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः।**
**त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम्॥' इति च॥**

सर्वत्रव्यापकावपि लीलारसप्रसारार्थं निजानुरक्तगोपाङ्गनाजनानन्दनार्थं च यत्रेमौ वृषभानुनन्दिनीनन्दनन्दनौ रसिकदम्पती समवतीर्य संक्रीडेते यत्र वा संततमेव स्वीये परमे पदे विहरतस्तदनयोर्दिव्यदिव्यं धन्यं धाममूर्धन्यं सकलशोकापनोदन गोलोकाह्वमिह च वृन्दावनाभिधं धाम कस्य नानमयति मूर्धानं धीरस्य। श्रुतिरपि श्रावयति सबहुमानं यदीयं महिमानमानमनीयं महनीयम् 'तद् विष्णोः परमं पदम्' इति। 'ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि' इति च (ऋग्वेदे विष्णुसूक्ते)।

भगवद्गुणगणगृणनयैव वाग्वैभवस्य साफल्यं स्याद् यत्र भगवान् भगवद्गुणा एव वा नानुवर्ण्यन्ते ता निखिला अपि गिरोऽसत्या असत्यश्च। यथोक्तं भागवते—

**मृषा गिरस्ता असतीरसत्कथा न कथ्यते यद् भगवानधोक्षजः।**
**तदेव सत्यं तदु हैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम्॥**

एतदेवालोच्य श्रीवृषभानुनन्दिनीचरणारविन्दगणरसिको रसिकाचार्यो वागीश

श्रीकृष्णसमाराध्याया: श्रीराधाया: करुणापाङ्गपङ्क्तिभि: प्रेरितो भावुकजन-भागधेयमिव श्रीराधासप्तशतीनामधेयं भक्तिरसनिर्झरमिम सद्ग्रन्थरत्नमुपन्य-भान्त्सीत्। सप्तशतीयं श्रिय: कृपयैव बृहत्सानुशिखरे भावुकस्य कवेरन्त:करणे प्रचकाशे। स्वानुभूतिरेव कविना पूर्वाचार्यवर्यानुमोदितोपन्यस्तेत्युपसंहारे समदर्शि—

**स्वानुभूतमिदं सर्वं पूर्वाचार्यसुसंमतम्।**
**सोपपत्तिकमत्रोक्तं सुकण्ठ तव प्रीतये॥**
**इयं वृन्दावनेश्वर्या: करुणापाङ्गपङ्क्तिभि:।**
**वागीशाचार्यहृदये बृहत्सानौ प्रकाशिता॥ इति॥**

साधनैरसाध्या सततं समाराध्या करुणावशंवदा श्रीराधैव सद्ग्रन्थस्यास्य मुख्य: प्रतिपाद्यविषय:। श्रीवृन्दारण्यनिवासरूपस्यैव प्रयोजनस्येह संयोजनमक्षिलक्ष्यीक्रियते—'राधासप्तशती वृन्दावनवासफलप्रदा।' इति श्रीराधाचरणारविन्दप्रणयपिपासवो गोपीभावभावितात्मानो भुक्तिमुक्तिस्पृहापिशाच्यापरामृष्टा. प्रेमप्रद्रुतचेतनाश्चेतना एवात्राधिकारिण: प्रीतिमार्गानुसारिण:। सम्बन्धबन्धश्चापि सुस्पष्ट एव समाराध्यसमाराधकभावलक्षण:।

रसिकशेखरयोरनयोरादिप्रेयसो रससाम्राज्ये कथं जीवस्य प्रवेश: सम्भवेत्? कीदृशी च रसोपासनासरणि:? का: काश्चानुभूतयो रसोपासनापदवीमनुसंचरतां रसिकानाम्? कथंकारं च परमानन्दरससिन्धू प्रियाप्रियतमौ निजाश्रितजनमनुगृह्णीते कथं च सिद्धिमुपेयुषा भावुकेन निकुञ्जलीलारस: समास्वाद्यत इत्यादिविषयाणामिह सम्यग् विवेचनमवेक्ष्यते।

ग्रन्थेऽस्मिन् सनातनगोस्वामिपादप्रणीतबृहद्भागवतामृतशैलीमनुसृत्य सुकण्ठमधुकण्ठसंवादमुखेन सरलसुबोधया प्रसन्नगम्भीरया कोमलकान्तपदावल्या रसनिर्भररुचिररचनया सप्तभिरध्यायै रसमार्गीयसाधकादर्शभूतस्य विप्रवरवसन्तदेवस्य साधनसोपानसमारोहणमुपवर्णितम्। प्रथमादारभ्यान्तिमाध्यायपर्यन्तमध्यायानां नामनिर्देशेनैव तद्गतविषयाणामभिव्यञ्जनं भवत्येव भावुकानामन्त:करणे। तथेह क्रमेण नामान्युद्ध्रियन्त—बृहत्सानुपुरप्रवेशो नाम प्रथम, राधामन्दिरमाधुरी नाम द्वितीय:, गह्वरगम्भीरता नाम तृतीय:, राधामन्दिरमहाप्रसादो नाम चतुर्थ:, श्रीवृन्दावनविरहवेदना नाम पञ्चम:, निकुञ्जलीलारसप्रवेशो नाम षष्ठ:, श्रीनिकुञ्जलीलारसास्वादो नाम सप्तमश्च।

प्रारम्भत: पञ्चस्वध्यायेषु वसन्तदेवस्य शनै: शनै: साधनसमुन्नते: क्रम: संलक्ष्यते। षष्ठे तूज्ज्वलनीलमणिप्रभृतिरसरीतिनिरूपकग्रन्थसरणिमनुसृत्य स्वकीयया प्रौढरचनया रसभावानुभावसंचारिभावरतिप्रेमस्नेहमानप्रणयरागानुराग

स्वरूप: सिद्धिमुपेयुषो भावुकस्य प्रत्यक्षीभूतनिकुञ्जलीलाया स-
सम्बोधकनिजानुभवोद्गारसमर्थक: परमसुन्दर: श्रवणाध्ययनमनोरम
इयमिदानीं मतिमता सम्मुखीनां हार्दिकान् भावानुद्गिरन्ती श्रीमदाच
सप्तशती विविच्य समालोचनीया सहृदयै:। नैतदतिरिच्यते चेद् दृ
किंचित्—वृन्दावने राधास्वरूपस्थितिवर्णनं यथा षष्ठे—

शक्तिस्वरूपा सा राधा ह्लादिनी परमेश्वरी।
स्वतन्त्रा सर्वमूर्धन्या रसदा रसिकेश्वरी॥
वृन्दावने कृष्णसेव्यां कृष्णप्राणां रसेश्वरीम्।
एतामुपासते सर्वे तृणगुल्मलतादय:॥
पलाशार्ककरीराद्या राधे राधे रटन्ति ताम्।
क्षुद्राश्चराचरा जीवा: सर्वे किमुत मानवा:॥

वृन्दावनस्वरूपं यथा तत्रैव—

वस्तुत: प्रेयसीप्रेष्ठप्रेमामृतरसात्मकम्।
वृन्दावनस्वरूपं हि विज्ञेयं रसिकप्रियम्॥

मानविषयां भ्रान्तधारणां निराकुर्वत: कवेरियमुक्तिर्भृशमादरर्णा

केचिदज्ञानिनो मानमभिमानं तु प्राकृतम्।
मन्यन्ते तामसं भावं तेन दग्धो रसो भवेत्॥
जहुर्गुणमयं देहमिति वैयासकेर्गिरा।
नैर्गुण्यं रासलीलाया हरेरिति सुनिश्चितम्॥
दम्भदर्पाभिमानाद्या सम्पदेषा मताऽऽसुरी।
श्रीकृष्णरासलीलायां संनिविष्टा कथं भवेत्॥

सिद्धावस्थायामनुभवपथमवतीर्णा ये लीलारसतरङ्गा
सरसपदावल्यामुपनिबद्धास्ते स्वानुभवैकगम्या: श्रिय: करुणयैवास्व
मवतरन्तीति सहृदया: श्रियोऽनुरागिण एव संविदन्ति। द्वित्रा
समुद्भियन्ते—

मनोहरिणवागुरां नयनमीनजालावृतां
कलिन्दतनयातटीमपि नवीनलीलास्थलीम्।
विटेन्द्रनिशि साहसं न कुरु गन्तुमद्येति तं
कदाभिसृतिभाषया तव नयामि राधे प्रियम्॥

धन्येयं सरसमधुराभिसृतिभाषा यत्र निषेधोऽपि विधावेव पर्यवस्य

पाणिद्वन्द्वमृणालमास्यकमलं कंदर्पलीलाजलं
श्रोणीघट्टशिला च नेत्रशफरीकेशौघशैवालकम् ।
वक्षोजामलचक्रवाकयुगलं राधासरः शीतलं
नित्यं स्नाहि हरे स्मराग्निशमनं भाग्येन लब्धं त्वया ।

लुप्तं ते तिलकं स्तने मलयजो धौतं च नेत्राञ्जनं
रागोऽपि स्खलितः कथं त्वदधरे ताम्बूलसम्पादितः ।
कस्तूरीमकरीविचित्ररचना नष्टा कथं गण्डयोः
स्नात्वा श्यामसरोवरे सखि समायातास्मि किं कुप्यसि ।।

भाग्येन श्रीराधासंदर्शनसुधारसं पिबतो भावुकस्यायमुद्गारः कियान् मनोहरः । दीयतामवधानमत्र——

धैर्यं धारय चित्त नाधिकमतो हे काम मां पीडय
भ्रातर्मुञ्च दृशौ निमेष विरमाद्याश्रुप्रवाह क्षणम् ।
राधाऽऽश्चर्यमयी महारससुधामाधुर्यधारावहा
सेयं लोचनगोचरीभवति मे भाग्येन भाग्येश्वरी ।।

एवंविधैः सुधासोदरसरसमधुरहृद्यपद्यरत्नैः संचितेयं सप्तशती केषां सचेतसां न चेतांसि हरति मनोहारिणी शब्दार्थोभयालंकारसमलंकृतसघटनाविशेषात् । वय तु ब्रूमोऽस्याः सप्तशत्या अहो प्रौढिपरिपाकः ! अहो गाम्भीर्यम् ! किञ्चाहो गीस्तरङ्गभङ्गी । किमधिकेन प्रतिपदमेतस्याः साहित्यसारसंचयैश्चिरं चेतश्चमत्कुरुत इति भावुकजनमानसप्रत्यक्षैकसाक्षिकम् । सततं समास्वाद्यतामयं महाकाव्यमाधुरीमुपदधानो ग्रन्थोऽधिकारिभिः श्रीराधागुणश्रवणरसिकैः सहृदयैरिति सादरं समनुरुन्धाना वयं पद्येनानेन कविमभिनन्दयामः——

आराधितश्रीवृषभानुकन्ये राधायशोवर्णनधन्यधन्ये ।
मन्ये त्वयि श्रीकृपयैव सार्था वागीश वागीश्वरता कृतार्था ।।

।। इति शुभम् ।।

श्रीश्री राधिकायै नमः

# नम्र निवेदन

'श्रीराधा कौन हैं? श्रीराधाका अस्तित्व सत्य है
राधाका स्वरूप नित्य अनादि अनन्त एकरस है या साधन
जगत्में उसका उत्तरोत्तर विकास हुआ है? श्रीराधा
श्रीकृष्णके साथ क्या सम्बन्ध है, राधा उनकी परिणीता
श्रीराधा विलासप्रिय—(जैसा कि बहुतसे कवियोंने उन
स्वच्छन्द रमणी हैं या साधन-जगत्की आदर्श परम त्या
क्या-क्या गुण हैं और उनकी कैसी क्या-क्या लीलाएँ हैं?
प्रश्नोंका उत्तर देनेकी न मुझमें योग्यता है, न शक्ति है, न
और न आवश्यकता ही है। श्रीराधाजीके अनन्त रूप ह
उनके स्वरूपभूत भाव-समुद्रमें अनन्त विचित्र तरंगें उठत
विभिन्न दृष्टियोंसे विभिन्न लोगोंने देखा है, अतएव उन
कहा जा सकता है कि जो उन्हें जिस भावसे जानना चाहते
सकते हैं

मुझे तो प्रेमी संत-महात्माओंके मतानुसार यही जान पड़ता है कि एकमात्र सच्चिदानन्दघनविग्रह भगवान् श्रीकृष्ण ही विभिन्न दिव्य रूपोंमे लीलायमान हैं। वह एक ही परमतत्व श्रीकृष्ण श्रीराधा और अनन्त गोपीजनोंके रूपमें दिव्यतम मधुरतम स्वरूपभूत लीला-रसका आस्वादन करता रहता है। इस आस्वादनमें वस्तुतः आस्वादक तथा आस्वाद्यका कोई भेद नहीं है। परम तत्व श्रीकृष्ण निरुपम निरुपाधि सत्, चित्, आनन्दघन हैं; सत् 'संधिनी', चित् 'चिति' और आनन्द 'ह्लादिनी' शक्ति हैं। ये 'ह्लादिनी' शक्ति स्वयं 'श्रीराधा' है, 'संधिनी' 'वृन्दावन' बनी है और 'चिति' समस्त लीलाओंकी व्यवस्थापिका तथा आयोजिका 'योगमाया' हैं। श्रीराधा ही लीलाविहारके लिये अनन्त कायव्यूहरूपा गोपाङ्गनाओंके रूपमें प्रकट हैं। भगवान् श्रीकृष्ण एकमात्र 'रस' हैं और उन दिव्य मधुरातिमधुर रसका ही यह सारा विस्तार है। भगवान् और भगवान्की शक्ति—यही वस्तुतः रस-तत्त्व हैं; अन्य समस्त रस तो विरस (विपरीत रस) कुरस (कुत्सित रस) और अरस (रसहीन) रूपसे पतनकारी हैं। अतएव सच्चिदानन्दविग्रह परम रस रसराज श्रीकृष्णमें और सच्चिदानन्दविग्रहा आनन्दांशघनीभूता, आनन्द-चिन्मय-रस-प्रतिभाविता रसमयी श्रीराधामें तत्त्वतः कुछ भी अन्तर नहीं है। नित्य एक ही, नित्य दो बने हुए लीला-रसका वितरण तथा आस्वादन करते रहते हैं। परन्तु भगवानकी केवल मधुरतम लीलाओंका ही नहीं, उनकी लीलामात्राका ही तत्वतः एकमात्र आधार उनका परम शक्ति—राधारूप ही है। शक्तिसे ही शक्तिमान्की सत्ता है और शक्ति रहती है शक्तिमानमें ही। अतः अनादि, सर्वादि, सर्वकारणकारण, अद्वय ज्ञान-तत्वरूप सच्चिदानन्दघन व्रजरसनिधि श्यामसुन्दर श्रीकृष्णचन्द्र और उनकी ह्लादिनी शक्ति श्रीराधाजीका परस्पर अभिन्न तथा अविनाभाव नित्य अविच्छेद्य तथा ऐक्य-संबन्ध है। श्रीराधा पूर्ण शक्ति हैं—श्रीकृष्ण पूर्ण शक्तिमान् हैं; श्रीराधा दाहिका शक्ति हैं,—श्रीकृष्ण साक्षात् अग्नि हैं; श्रीराधा प्रकाश हैं—श्रीकृष्ण भुवन-भास्कर हैं; श्रीराधा ज्योत्स्ना हैं—श्रीकृष्ण पूर्ण चन्द्र है। इस प्रकार दोनों नित्य एक-स्वरूप हैं। एक होते हुए ही श्रीराधा समस्त कृष्णकान्ताओंकी शिरोमणि ह्लादिनी शक्ति है। वे स्वमन-मोहन-मनोमोहिनी हैं, भुवनमोहन-मनोमोहिनी हैं, मदन-मोहन-मनोमोहिनी हैं। वे पूर्णचन्द्र श्रीकृष्णचन्द्रके पूर्णतम विकासकी आधारमूर्ति हैं और वे हैं अपने विचित्र विभिन्न भावतरंग-रूप अनन्त सुख-समुद्रमें श्रीकृष्णको नित्य निमग्न रखनेवाली महाशक्ति। ऐसी इन राधाकी महिमा राधाभावद्युति-सुवलित-तनु श्रीकृष्णचन्द्रके अतिरिक्त और कौन कह सकता है? पर वे भी नहीं कह सकते; क्योंकि राधागुण-स्मृति मात्रसे ही वे इतने विह्वल तथा मुग्ध, गद्गद्-कंठ हो जाते हैं कि उनके द्वारा शब्दोच्चारण ही संभव नहीं होता।

इन्हीं श्रीश्यामसुन्दरकी एकांत आराधिका एवं परम आराध्या श्रीराधाकी मधुरतम दिव्यतम निकुञ्जविहार-लीलाका बड़ा ही सुललित वर्णन सुबोध संस्कृत पद्योंमें 'श्रीराधासप्तशती'में किया गया है और साथ ही इस परम साध्य तक पहुँचनेके सुन्दर सरल साधन भी इसमें बतलाये गये हैं। इस परम अनुकम्पाके लिये इस मार्गपर आरूढ़ सभीको पूज्य श्रीशास्त्रीजीका कृतज्ञ होना चाहिये। मैं तो रसशास्त्रसे सर्वथा अनभिज्ञ, नितान्त अज्ञ हूँ। इसलिये रस-शास्त्रकी दृष्टिसे कुछ भी कहना मेरे लिये सर्वथा अनधिकार चेष्टा है। अत: इस विषयपर कुछ भी न कहकर जिनका दिव्यातिदिव्य पद-रज-कण ही मेरा परम आश्रय है, उन श्रीराधाजीके सम्बन्धमें कुछ शब्द उनकी कृपासे लिख रहा हूँ। जिन श्रीराधाजीकी अयाचित कृपासे मुझे उनका जो कुछ परिचय मिला है और जिन्होंने अपने महान् अनुग्रहदानसे मुझ पतित पामरको अपनाकर कृतार्थ किया है; वे अपनी अचिन्त्य महिमामें स्थित श्रीराधाजी न तो विलासमयीरमणी हैं, न उनका उत्तरोत्तर क्रमविकास हुआ है, न वे कविहृदय-प्रसूत कल्पना हैं, और न उनमे किसी प्रकारका गुण-रूप-सौन्दर्याभिमान ही है। वे नित्य सत्य एकमात्र अपने प्रियतम श्रीश्यामसुन्दरकी सुखविधाता हैं। वे इतनी त्यागमयी हैं, इतनी मधुर-स्वभावा हैं कि अचिन्त्यानन्त गुण-गणकी अनन्त आकर होकर भी अपनेको प्रियतम श्रीकृष्णकी अपेक्षासे सर्वथा सद्‌गुण-हीन अनुभव करती हैं, वे परिपूर्ण प्रेमप्रतिमा होनेपर भी अपनेमें प्रेमका सर्वथा अभाव देखती हैं; वे समस्त सौन्दर्यकी एकमात्र निधि होनेपर भी अपनेको सौन्दर्यरहित मानती हैं और पवित्रतम सहज सरलता उनके स्वभावकी सहज वस्तु होनेपर भी वे अपनेमें कुटिलता तथा दम्भके दर्शन करती और अपनेको धिक्कार देती हैं। वे अपनी एक अन्तरङ्ग सखीसे कहती हैं—

सखी री! हौं अवगुन की खान।
तन गोरी, मन कारो भारी, पातक पूरन प्रान॥
नहीं त्याग रंचक मो मनमें भरचो अमित अभिमान।
नहीं प्रेम कौ लेस, रहत नित निज सुख कौ ही ध्यान॥
जग के दु:ख-अभाव सतावैं, हो मन पीड़ा-भान।
तब तेहि दुख दृग स्रवैं अश्रुजल, नहिं कछु प्रेम-निदान॥
तिन दुख-अँसुवन कौं दिखरावौं हौं सुचि प्रेम महान।
करौं कपट, हिय-भाव दुरावौं, रचौं स्वाँग स-ज्ञान॥
× × × ×
भोरे मम प्रियतम, विमुग्ध ह्वै करें बिमल गुन-गान।
अतिसय प्रेम सराहैं. मोकूँ परम प्रेमिका मान॥

तुम हूँ सब मिलि करौ प्रसंसा, तब हौं भरौं गुमान।
करौं अनेक छद्म तेहि छिन हौं, रचौं प्रपंच-बितान।।
स्याम सरल-चित ठगौं दिवसनिसि, हौं करि बिबिध बिधान।
धृग् जीवन मेरौ यह कलुषित धृग् यह मिथ्या मान।।

इस प्रकार श्रीराधाजी अपनेको सदा-सर्वदा सर्वथा हीन-मलिन मानती हैं, अपनेमें त्रुटि देखती हैं,—परम सुन्दर गुणसौन्दर्यनिधि श्यामसुन्दरकी प्रेयसी होनेकी अयोग्यताका अनुभव करती है एवं पदपदपर तथा पल-पलमें प्रियतमके प्रेमकी प्रशंसा तथा उनके भोलेपनपर दुःख प्रकट करती है। श्यामसुन्दरके मथुरा पधार जानेपर वे एकबार कहती हैं—

सद्गुणहीन, रूप-सुषमासे रहित, दोषकी मैं थी खान।
मोहविवश मोहनको होता, मुझमें सुन्दरताका भान।।
न्यौछावर रहते मुझपर, सर्वस्व स-मुद कर मुझको दान।
कहते थकते नहीं कभी—'प्राणेश्वरि!' 'हृदयेश्वरि!' मतिमान।।
'प्रियतम! छोड़ो इस भ्रमको तुम'—बारबार मैं समझाती।
नहीं मानते, उर भरते, मैं कण्ठहार उनको पाती।।
गुण-सुन्दरतारहित, प्रेमधन-दीन, कला-चतुराई हीन।
मूर्खा, मुखरा, मान-मद-भरी मिथ्या, मैं मतिमंद मलीन।।

× × × ×

रहता अति संताप मुझे प्रियतमका देख बढ़ा व्यामोह।
देव मनाया करती मैं, प्रभु! हरलें सत्वर उनका मोह।।

श्रीराधाके गुण-सौन्दर्यसे नित्य मुग्ध प्रियतम श्यामसुन्दर यदि कभी प्रियतमा श्रीराधाके प्रेमकी तनिक भी प्रशंसा करने लगते, उनके प्रति अपनी प्रेम-कृतज्ञताका एक शब्द भी उच्चारण कर बैठते, अथवा उनके दिव्य प्रेमका पात्र बननेमें अपने सौभाग्य-सुखका तनिक-सा संकेत भी कर जाते, तो श्रीराधाजी अत्यन्त संकोचमें पड़कर लज्जाके मारे गड़-सी जातीं। एकबार उन्होंने श्यामसुन्दरसे रोते-रोते कहा—

तुमसे सदा लिया ही मैंने, लेती लेती थकी नहीं।
अमित प्रेम-सौभाग्य मिला, पर मैं कुछ भी दे सकी नहीं।।
मेरी त्रुटि, मेरे दोषोंको तुमने देखा नहीं कभी।
दिया सदा, देते न थके तुम, दे डाला निज प्यार सभी।।

तब भी कहते—'दे न सका मैं तुमको कुछ भी, हे प्यारी !
तुम-सी शील-गुणवती तुम ही, मैं तुम पर हूँ बलिहारी ।।'
क्या मैं कहूँ प्राण-प्रियतमसे, देख लजाती अपनी ओर ।
मेरी हर करनीमें ही तुम प्रेम देखते नन्दकिशोर ।।

श्रीराधाजीका जीवन प्रियतम-सुखमय है। वे केश सँवारती हैं, वेणीमें फूल गूँथती हैं, मालतीकी माला पहनती हैं, वेश-भूषा, साजशृंगार करती हैं, पर अपनेको सुखी करनेके लिये नहीं; वे सुस्वादु पदार्थोंका भोजन-पान करती हैं परन्तु जीभके स्वाद या अपने शरीरकी पुष्टिके लिये नहीं; वे दिव्य गन्धका सेवन करती हैं पर स्वयं उससे आनन्दलाभ करनेके लिये नहीं; वे सुन्दर पदार्थोंका निरीक्षण करती है, पर अपने नेत्रोंको तृप्त करनेके लिये नहीं; वे मधुर-मधुर संगीत-ध्वनि सुनती हैं, पर अपने कानोंको सुख पहुँचानेके लिये नहीं; वे सुख-स्पर्श प्राप्त करती है, पर अपने त्वगेन्द्रियकी प्रसन्नताके लिये नहीं। वे चलती-फिरती हैं, सोती-जगती हैं, सब व्यवहार-वर्ताव करती हैं, पर अपने लिये नहीं, वे जीवनधारण भी अपने लिये नहीं करतीं। वे यह सब कुछ करती हैं—केवल और केवल अपने परम प्रियतम श्रीकृष्णको सुख पहुँचानेके लिये !

वस्तुत: वे सदा सर्वदा यही अनुभव करती हैं कि उनके समस्त मन-इन्द्रिय, उनके समस्त अंग-अवयव, उनके चित्त-बुद्धि, उनका चेतन आत्मा—सभीको श्रीकृष्ण अपने नित्यनिरन्तर सुख-संस्पर्श दानमें ही संलग्न बनाये रखते हैं, अन्य किसीका भी वे कभी संकल्प भी करें, इसके लिये तनिकसा अवकाश नहीं देते या क्षणभरके लिये किसी अंगकी वैसी स्व-संस्पर्शरहित स्थिति ही नहीं होने देते। श्रीराधाजी अपनी परिस्थिति बतलाती हैं—

स्रवननि भरि निज गिरा मनोहर मधु मुरली की तान।
सुनन न दै कछु और सबद, नित बहरे कीन्हें कान ।।
लिपटो रहै सदा तन सौं मम रह्यौ न कछु बिबधान।
अन्य परस की सुधि न रही कछु, भयौ चित्त इकतान ।।
अँखियन की पुतरिन मैं मेरे निसिदिन रह्यौ समाय।
देखन दै न और कछु कबहूँ एकै रूप रमाय ।।
रसना बनी नित्य नव रसिका चाखत चारु प्रसाद।
मिटे सकल परलोक-लोक के खाटे मीठे स्वाद ।।
अंग सुगंध नासिका राची मिटी सकल मधु बास।
भई प्रमत्त गई अग-जग की सकल सुबास-कुबास ।।

मन में भरि लीन्हीं मोहन निज मुनि-मोहनि मुसकान।
चित्त करयौ चिंतन रत चिन्मय चारु चरन छबिमान।।
दई डुबाय बुद्धि रस-सागर उछरन की नहिं बात।
आज मिल्यौ चेतन में मोहन भयौ एक संघात।।

अतएव श्रीराधाके श्रृंगार-रसमें तथा जागतिक श्रृंगारमें नामोंकी समताके अतिरिक्त किसी भी अंशमें, कहीं भी, कुछ भी तुलना ही नहीं है। तत्त्वतः और स्वरूपतः दोनों परस्पर सर्वथा विपरीत, भिन्न तथा विषम वस्तु है। लौकिक श्रृंगार होता है—काममूलक, कामकी प्रेरणासे निर्मित ! इन्द्रिय-तृप्तिकी स्थूल या सूक्ष्म कामना-वासना ही उसमे प्रधान हेतु होती है।

साधारण नायक-नायिकाके श्रृंगार-रसकी तो बात ही नहीं करनी चाहिये, उच्चसे उच्चतर पूर्णताको पहुँचा हुआ दाम्पत्य-प्रेमका श्रृंगार भी अहंकारमूलक सुतरां कामप्रेरित होता है, वह स्वार्थपरक होता है, उसमें निज सुखकी कामना रहती है। इसीसे इसमें और उसमें उतना ही अन्तर है, जितना प्रकाश और अन्धकारमें होता है। यह विशुद्ध प्रेम है और वह काम है। मनुष्यके आँख न होने पर तो वह केवल दृष्टिशक्तिसे ही हीन अन्धा होता है, परन्तु काम तो सारे विवेकको ही नष्ट कर देता है। इसीसे कहा गया है—'काम अन्धतम, प्रेम निर्मल भास्कर' काम अन्धतम है, प्रेम निर्मल सूर्य है। इस काम तथा प्रेमके भेदको भगवान् श्रीराधा-माधवकी कृपासे उनके विरले प्रेमी भक्त वैसे ही जानते है, जैसे अनुभवी रत्न-व्यापारी—जौहरी कांच तथा असली हीरेको पहचानते और उनका मूल्य जानते हैं। काम या काममूलक श्रृंगार इतनी भयानक वस्तु है कि वह केवल कल्याण-साधनसे ही नहीं गिराता, सर्वनाश कर डालता है। कामकी दृष्टि रहती है अधः इन्द्रियोंकी तृप्तिकी ओर, एवं प्रेमका लक्ष्य रहता है—ऊर्ध्वतम सर्वानन्दस्वरूप भगवान्के आनन्दविधानकी ओर। कामसे अधःपात होता है, प्रेमसे दिव्यातिदिव्य भगवद्-रसका दुर्लभ आस्वादन प्राप्त होता है। कामके प्रभावसे विद्वान्‌की विद्वत्ता, बुद्धिमान्‌की बुद्धि, त्यागीका त्याग, संयमीका संयम, तपस्वीकी तपस्या, साधुकी साधुता, विरक्तका वैराग्य, धर्मात्माका धर्म और ज्ञानीका ज्ञान—बातकी बातमें नष्ट हो जाता है। इसीसे बड़े-बड़े विद्वान् भी 'राधाप्रेम' के नामपर, उज्ज्वल श्रृंगाररसके नामपर पापाचारमें प्रवृत्त होजाते हैं और अपनी विद्वत्ताका दुरुपयोग करके लोगोंमें पापका प्रसार करने लगते हैं !

अतएव जहाँ भी लौकिक दृष्टि है, भौतिक अंग-प्रत्यंगोंकी स्मृति है, उनके सुख-साधनकी कल्पना है, इन्द्रिय भोगोंमें सुखकी भावना है वहाँ इस दिव्य

शृंगार-रसके अनुशीलनका तनिक भी अधिकार नहीं है। रति, प्रणय, स्नेह, मान, राग, अनुराग और भावके उच्च स्तरोंपर पहुँची हुई श्रीगोपाङ्गनाओंमें सर्वोच्च 'महाभाव' रूपा श्रीराधाकी काम-जगत्से वैसे ही सम्बन्ध—लेश-कल्पना नहीं है, जैसे सूर्यके प्रचण्ड प्रकाशमें अन्धकारकी कल्पना नहीं है। इस रहस्य-तत्वको भलीभाँति समझकर इसी पवित्र भावसे जो इस राधामाधवके शृंगारका अनुशीलन करते हैं, वे ही वास्तवमें योग्य अधिकारका उपयोग करते हैं। नहीं तो, यह निश्चित समझना चाहिये कि जो लोग काममूलक वृत्तिको रखते हुए इस शृंगार-रसके क्षेत्रमें प्रवेश करेंगे, उनकी वही दुर्दशा होगी, जो मधुरताके लोभसे हलाहल विषपान करनेवालेकी, या शीतलता प्राप्त करनेकी अभिलाषासे प्रचण्ड अग्निकुण्डमें उतरनेवालेकी होती है!

यह स्मरण रखना चाहिये कि योग्य अधिकारी ही इस श्रीराधारानीके दिव्य शृंगार-राज्यमें प्रवेश कर सकते हैं। इस दिव्य प्रेमजगत्में प्रवेश करते ही एक ऐसे अनिर्वचनीय परम दुर्लभ विलक्षण दिव्य चिदानन्दमय रसकी उपलब्धि होती है कि उससे समस्त विषय-व्यामोह तो सदाके लिये मिट ही जाता है, दुर्लभसे दुर्लभ दिव्य देवभोगोंके आनन्दसे ही नहीं, परम तथा चरम वाञ्छनीय ब्रह्मानन्दसे भी अरुचि होजाती है। श्रीराधामाधव ही उसके सर्वस्व होकर उसमें बस जाते हैं और उसको अपना स्वेच्छा-सञ्चालित लीलायन्त्र बनाकर धन्य कर देते हैं!

ज्ञानवृद्ध, वयोवृद्ध, परम विद्वान्, सफल कवि, रसशास्त्रके महान् पण्डित, चिर-वृन्दावनवासका सौभाग्यप्राप्त किये हुए पूज्यपाद पण्डित श्री वागीशजी शास्त्री महाराजने मुझको अपने इस 'श्रीराधासप्तशती' ग्रन्थकी भूमिका लिखनेका आदेश दिया; उनके आज्ञापालनार्थ मैंने यह निवेदन लिखनेकी धृष्ठता की है। वास्तवमें मेरे जैसे नगण्य जन्तुका श्रीराधाके सम्बन्धमें कुछ भी लिखने जाना अपनी अज्ञताका परिचय देनेके साथ ही विद्वान् लेखकका भी सम्मान बढ़ाना नहीं है, यद्यपि वे अपने स्वभाववश प्रसन्न ही होंगे। वैसे ही, श्रीराधारानीका भी यह तिरस्कार ही है। पर इस तिरस्कारके लिये तो वे स्वयं ही दायी हैं; क्योंकि उन्हींकी अन्त:प्रेरणासे यह लिखा गया है। सबके चरणोंमें सादर प्रणाम।

दीन हीन तुच्छातितुच्छ
**हनुमानप्रसाद पोद्दार**
सम्पादक, 'कल्याण'

श्रीराधा सर्वेश्वरी विजयते

# प्रस्तावना

श्रीमहामहिम परमपावन मङ्गलमूर्ति मङ्गलायतन श्रीभगवान्‌की पादविभूति और त्रिपादविभूतिमें जो कुछ हो रहा है, वह सब श्रीभगवान्‌के मङ्गलमय विधानके अनुसार सर्वथा मङ्गलमय है। परंतु इस दीन-हीन महामलिन पापपीन मायाधीन अज्ञानी जीवको श्रीभगवान्‌के परम पावन मङ्गलमय विधानमें विषमता-निर्दयता आदि दोष प्रतीत होते हैं, यद्यपि श्रीभगवान्‌में उक्त दोष कभी नहीं हैं; क्योंकि प्राणियोंके पूर्वकृत कर्मोंके अनुसार ही श्रीभगवान् उनके फल आदिकी व्यवस्था करते हैं। ब्रह्मसूत्रकार श्रीवेदव्यासका कथन है—"फलमत उत्पत्तेः" "वैषम्यनैर्घृण्येन सापेक्षत्वात्।" (२।१।३४) यदि कहो कि 'महाप्रलयमें तो कर्म-विभाग रहता ही नहीं,' तो यह बात नहीं है। अनादि कालसे कर्म-प्रवाह प्रवाहित है। महाप्रलयमें उसका रूप अव्यक्त हो जाता है, बीजरूपसे कर्म रहते हैं।

"न कर्माविभागादिति चेन्नानादित्वात्।" (२।१।३५)

चेतनको श्रीभगवान्‌के सभी विधानोंसे संतुष्ट रहना चाहिये। श्रीभगवान्‌की ओरसे इस चेतनके अनिष्टकी सम्भावनाका कभी कोई भी कारण नहीं है। यदि कोई है तो अनादि माया-बन्धन ही कारण है। इसीसे यह चेतन सदा त्रितापसंतप्त रहता है मायाके रज-तम-सत्त्व इन तीनों गुणोंसे बद्ध

जीवोंको मुक्त करनेके लिये परम कारुणिक वेदोंने विभिन्न प्रकारके साधन कर्म-ज्ञान-उपासना आदि उपायोंका विधान किया है—"त्रैगुण्यविषया वेदा ।" सर्वोत्तम उपाय श्रीभगवान्‌की ज्ञानपूर्वक की हुई उपासना और उनके श्रीचरणोंकी प्रपत्ति है। "तरति शोकमात्मवित्" "तमेव विदित्वातिमृत्यु, मेति" "ऋते ज्ञानान्न-मुक्तिः", "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"। "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इत्यादि अनेक श्रुति-स्मृति-प्रोक्त प्रमाणोंसे अशरणशरण श्रीभगवच्चरणोंको ही शरण रूपमें वरण करना सर्वथा श्रेयस्कर सिद्ध होता है। श्रीभगवान्‌में आश्रयण-सौकर्यापादक और आश्रित-कार्यापादक सकल हेयप्रत्यनीक दिव्य कल्याण गुणगणोंकी पूर्णता है। १. वात्सल्य, २. स्वामित्व, ३. सौशील्य और ४. सौलभ्य——इन चार गुणोंको श्रीभगवान्‌में देखकर आश्रयणकर्ता असंदिग्ध और असंकुचित होकर श्रीचरणोंकी शरणवरण करनेमें उत्साहपूर्वक प्रवृत्त हो जाता है। तथा १. ज्ञान, २. शक्ति, ३. पूर्ति और ४. प्राप्ति——भगवान्‌के ये चार गुण जीवको भवसागरसे पार करने और उसके मनोरथ पूर्ण करनेमें परम उपयोगी हैं। जीवके इष्ट-अनिष्टका यथार्थ ज्ञान श्रीभगवान्‌को ही है, अन्य किसीको नहीं। इष्ट साधन और अनिष्ट निवारण श्रीभगवान् ही कर सकते हैं; क्योंकि अघटित-घटना-पटीयसी शक्ति उन्हींमें है। श्रीभगवान् अवाप्त-समस्त-काम हैं, उनमें पूर्ति-पूर्णता है, उन्हें किसी प्रकारका अभाव नहीं; अत वे जीवका कार्य करके प्रत्युपकारमें कोई उपहार नहीं चाहते। चतुर्थ गुण है—प्राप्ति, जीवको उन्हें खोजनेकी आवश्यकता नहीं। वे उसके शरीर और शरीरी दोनोंके क्षेत्रज्ञ बनकर उसके हृदयमें ही बैठे रहते हैं, नरकादिकोंमें भी कभी साथ नहीं छोड़ते।

उपर्युक्त अष्टगुणोंके अतिरिक्त इन वृन्दावन-निकुञ्ज-विहारी श्रीकृष्ण-भगवान्‌में सौन्दर्य-माधुर्य-लावण्य आदि अनेकों व्यामोहक गुण हैं, जिनका अनुभव करके यह जीव भुक्ति-मुक्ति, सब भूल जाता है, और उसकी यही इच्छा होती है कि इस 'साँवरे सलोने मोरपंखवारे'की ओर नित्य निरन्तर निहारता ही रहे। इन्हीं सौन्दर्यसागर माधुर्यमूर्ति श्रीकृष्णका सारतम स्वरूप श्रीमती राधा है, जिनके महाप्रेम-रससिन्धुके अवगाहनके लिये उन्हींकी करुणापाङ्ग-पंक्तियोंसे प्रेरित होकर ग्रन्थकारने "श्रीराधासप्तशती" नामक इस ग्रन्थकी रचना की है।

इस उज्ज्वल शुचि शृङ्गार रसपूर्ण रसग्रन्थमें अलौकिक अप्राकृत दिव्य सरस मधुर श्रीनिकुञ्ज दम्पतीके लीलाविलासका निरूपण है तथा वहाँतक पहुँचनेकी कृपामयी सरस साधन-पद्धतिका भी निरूपण है। ऐसे रस-ग्रन्थके विषयमें यह कहना कि अमुक व्यक्ति इसका रचयिता है सगत नहीं क्योंकि यह रस कृपा-साध्य वस्तु है निज

स्वरूप है। इसकी अभिव्यक्ति केवल उनकी कृपासे होती है। किसी भी भावुक महानुभावके हृदयमें इस रसका प्रकाश हो सकता है। अतएव श्रीवृन्दावनेश्वरीकी कृपा दृष्टि से ही इस दासके, दीन हृदयमें श्रीराधासप्तशती ग्रन्थका प्रादुर्भाव हुआ है। इसके पाठ करनेसे यद्यपि सारी कामनाएँ सिद्ध होती हैं, तथापि इसका मुख्य फल है—श्री वृन्दावन-रसका आस्वादन करते हुए श्रीवृन्दावनवासकी प्राप्ति।

इस ग्रन्थका मुख्य प्रतिपाद्य विषय तो है श्रीराधा—यह ग्रन्थ श्रीराधाके परत्वका प्रतिपादक है। प्रयोजन है—श्रीवृन्दावन वास, जिसके बिना श्रीराधा-रस-सुधाका आस्वादन दुर्लभ है। अधिकारी है—श्रीराधा-प्रीतिरस-पिपासु, भुक्ति-मुक्ति-स्पृहा-रहित द्रुतचित्त चेतन।

वैकुण्ठवासिनी श्रीरमा, लक्ष्मी, सीता, रुक्मिणी, राधा, पराशक्ति, ह्लादिनी, पट्टमहिषी, रासेश्वरी, निकुञ्जविहारिणी—ये सब राधास्वरूपके ही वाचक नाम-रूप हैं। तात्विक दृष्टिसे इनमें कोई भेद नहीं है। तथापि लीला और रसकी दृष्टिसे रसिकजन भेद मानते हैं।

श्रीराधाके पावन नामको लोग वेदोंमें और भागवत आदि पुराणोंमें खोज करते हैं। उनसे हमारा यह कहना है कि जिन ग्रन्थोंमें श्रीराधा-नाम नहीं हैं; वे ग्रन्थ संसारियोंके लिये त्रैगुण्यविषयक बताये गये हैं। उनमे श्रीराधा-नामका न होना ही उचित है। श्रीराधा तो अत्यन्त अलक्ष्य अनिर्वचनीय महाप्रेमरसकी घनीभूत मूर्ति है; उसको सर्वत्र सभी ग्रन्थोंमें हम प्रत्यक्ष पा सके, ऐसा आग्रह नहीं होना चाहिये। जैसे मणि-मुक्तादि सर्वत्र सुलभ नहीं, वे तो महानगरोंके जौहरी-बाजारमें ही मिलते हैं—वहाँ भी गुप्तरूपमें रक्खे रहते हैं, केवल अधिकारियोंको ही उनके दर्शन होते हैं—वैसे ही वेदों-पुराणोंमें श्रीराधाका गुप्तरूपसे संकेत मात्र मिलता है, कहीं-कहीं विस्तार भी है। श्रीभागवतमें दो जगह संकेत आता है—एक द्वितीय स्कन्धमें श्रीशुककी स्तुतिमें "निरस्तसाम्यातिशयेन राधसा" तथा दूसरा श्रीरासपंचाध्यायीमें—"अनयाराधितो नूनं भगवान् हारिरीश्वरः।" ऐसी अनुश्रुति है कि श्रीशुकदेवजीने श्रीराधा-नामका भागवतमें इसलिये स्पष्ट-वर्णन नहीं किया कि उन्हें श्रीराधा-नामोच्चारणमात्रसे मूर्च्छा हो जाती थी। मूर्च्छा होजानेपर कथा बंद हो जाती और श्रीपरीक्षित्का महान् अहित हो जाता।

श्रीराधानाममात्रेण मूर्छा षाण्मासिकी भवेत्।
नोच्चारितमतः स्पष्टं परीक्षिद्धितकृन्मुनिः ॥

वेदोंमें 'विशाखा' नक्षत्रको 'राधा' कहा गया है। उसके आगेके नक्षत्रका नाम 'अनुराधा' है श्रीराधाका विशाखा नक्षत्रमें जन्म हुआ है अत उनका राधा नाम

पड़ा। यह प्रकट अवतार-लीलाकी बात है। नित्य लीलामें तो जन्म ही नहीं होता, वहाँ नक्षत्रके नामकी कल्पना ही नहीं बनती। वहाँ तो ऋग्वेदके राधिकोपनिषद्के अर्थको लेना पड़ेगा। "जिसकी श्रीकृष्ण सदा आराधना करते हैं, वह है 'राधा'। और जो श्रीकृष्णकी आराधना करती है वह है 'राधिका'। ये दो अर्थ उपनिषद्ने स्वीकार किये हैं—"कृष्णेन आराध्यते इति- कृष्णं राधा, समाराधयति सदेति राधिका।"

परम दयालु वेदोंने मायागुणबद्ध संसारी चेतनोंको शिक्षा देकर महान् उपकार किया है। इसका अभिप्राय यह नहीं है कि वेदोंने परमात्मा तथा उसके गुण-वैभव-शक्ति आदिका वर्णन नही किया, गुणातीत वस्तुकी चर्चा ही नहीं की है। वेदोंका तो मुख्य प्रतिपाद्य विषय श्रीभगवान् है—"वेदैश्च सर्वैरहमेव वेद्यो:।" श्रीभगवान्से सम्बन्ध रखनेवाली सभी वस्तुओंका वर्णन वेदोंमें है। तो फिर श्रीभगवान्की स्वरूपभूता अभिन्ना अपृथक्सिद्धा ह्लादिनी शक्ति श्रीराधा वर्णित हुए बिना कहाँ रह सकती हैं। वेदोमे 'शक्ति' 'परा' आदि नामोसे राधाका वर्णन है, "परास्य शक्तिर्विविधैव श्रूयते।" राधा ही श्रीदेवी, लक्ष्मी देवी हैं। वेदमें "श्रीसूक्त, "लक्ष्मीसूक्त" प्रसिद्ध है। श्रीराधा भगवान्की चमत्कारमयी शक्ति हैं, चमत्कारको ही सब नमस्कार करते हैं। अथवा श्रीकृष्णकी श्रीराधा आत्मा हैं, उनके साथ रमण करनेसे श्रीकृष्णको 'आत्माराम' कहते हैं। "आत्मा-तु राधिका तस्य तयैव रमणा-दसौ। आत्माराम इति प्रोक्तः रसरीतिविचक्षणैः।" जहाँ कहीं वेद-पुराण आदिमें श्रीभगवान्की महिमाका वर्णन है, वह सब शक्तिका विलास है; श्रीजीका ही वैभव है। अतएव महर्षि वाल्मीकिने "कृत्स्नं रामायणं काव्यं सीतायाश्चरितं महत्" ऐसा कथन किया है—यह सम्पूर्ण विशाल रामायण-महाकाव्य केवल सीता-चरित्र है—सीताके वैभवका प्रतिपादक है।

श्रीजीका वैभव अनन्यसिद्ध है और श्रीभगवान्का वैभव श्रीसम्बन्धजन्य है—यह बात श्रीरामायणमें स्पष्ट है। "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा।" अर्थात् जिसकी वह अद्भुत विलक्षण-रूप-गुणशालिनी जनककुमारी पत्नी है, उसके तेजकी कोई तुलना नहीं कर सकता। "शीतो भव हनूमतः" श्रीजीके मुखसे यह वचन निकलते ही श्रीहनुमान्की पूँछकी अग्निज्वाला शीतल हो गयी। इस दुर्घ घटनाको देखकर ही वो गर्जना करते हुए बोले—"जयत्यतिबलो रामो लक्ष्मणश्च महाबलः॥ इत्यादि अनेक उदाहरणोसे श्रीजीका अनन्यसिद्ध वैभव स्पष्ट है।

'श्रीराधासप्तशती' में इसी वैभवका प्रेम-रस-विलासके रूपमें विस्तारसे वर्णन किया गया है। श्रीभगवान्की पराशक्तिस्वरूपा श्रीराधाकी अंशभूता ह्लादिनी शक्तिकी ममतामयी दिव्यकिरण जो पवित्र सात्त्विक कोमल चित्तवाले अधिकारी चेतनके हृदयमें प्रतिबिम्बित होती है वही प्रेम है इसी प्रेमके

सम्बन्धसे श्रीराधा कृष्णकी परम आस्वाद्य निज प्रेम-रस-माधुरीका आस्वादन इस प्रेमी चेतनको भी प्राप्त हो जाता है—ठीक उसी प्रकार, जैसे अपने सम्बन्धीके सुख-दुःख अपनेको भी सम्बन्धबलसे प्राप्त होते हैं अथवा जैसे बगीचेकी जलाशय का जल नलोंके सम्बन्ध द्वारा सारे बगीचेकी क्यारियोंमें पहुँच जाता है।

प्रेम—ईश्वरके अतिरिक्त ईश्वरीय विभूतिरूप चेतनवर्गसे भी किया जा सकता है।

प्रेमका चर्वण ही रस है। प्रेमके चारों ओर रसका महासमुद्र बहता है। परंतु भगवद्भिन्न पात्रोंमें प्राकृत दोषोंका सम्मिश्रण है, अतः साधकोंको 'पतनका' भय है।

यद्यपि प्राकृत कवियोंने आर्य चारुदत्त, वसन्तसेना वेश्या आदि पात्रोंको लेकर शृङ्गार रसका वर्णन किया है, तथापि इस पद्धतिको दोषजनक समझकर साहित्यदर्पणकारने "उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते" इस कारिकाके द्वारा उसका खण्डन किया है और यह बताया है कि उत्तम प्रकृतिवाले ही इस रसके पात्र होने चाहिये।

वेदके रसकाण्डमें "रसो वैसः'—इस श्रुतिद्वारा रसको ईश्वरका स्वरूप बताया है। 'ब्रह्म', 'परमात्मा', 'भगवान्'—ये सब रसके पर्यायवाचक नाम हैं। प्रेम ही रस है। नारदके भक्तिसूत्र ५४में प्रेमको प्राकृत गुण तथा कामसे गन्ध-रहित बताया है—"गुणरहितं कामनारहितं प्रतिक्षणवर्धमानमविच्छिन्नं सूक्ष्मतरमनुभवरूपम्" अपनी इन्द्रियोंको चरितार्थ करनेकी इच्छाका नाम 'काम' है। इस कामके स्थानपर लोग प्रेम, स्नेह आदि शब्दोंका प्रयोग करते हैं। यह बहुत बड़ी भूल है। प्रेमी अपने लिये कुछ भी नहीं चाहता, वह अपने प्रेमास्पदके लिये अपना सब कुछ अर्पण कर देता है—इतना ही नहीं, वह उसका अनन्यार्ह भोग्य बन जाता है। प्रेमीको अपने प्रेमास्पदमें शील-रूप-सौन्दर्य आदि गुणोंकी अपेक्षा नहीं होती। गुणकृत प्रीति तो कामवृत्ति है, उसे प्रेम नहीं कह सकते। वास्तवमें इस प्राकृत जगत्मे कामादि दोषोंके कारण इस चेतनको प्रेमरसका यथार्थ अनुभव हो ही नहीं पाता। इसके लिये दिव्य भावमय शरीर और दिव्यधाम-चिदानन्दमयी त्रिपादविभूति चाहिये। अतएव "श्रीराधासप्तशती" में श्रीवृन्दावनस्थ नित्य निकुञ्जरूप परमपद त्रिपाद विभूतिकी प्राप्तिकी विशेषरूप से आकाङ्क्षा की गयी है। जहाँ श्रीभगवान्की स्वरूप-भूतारूप लीलागुण-विभूतियोंका सदा अनुभव हो, उसे परमपद कहते हैं—"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।"

प्राकृत जगत्में हम प्रेमकी—रसकी उलटी-सीधी केवल बातें कर लेते हैं और मनमाने ग्रन्थ भी लिख डालते हैं जिससे केवल हमारा स्वार्थमय चलने

लगता है। गोपीजनोंकी तरह "जित देखूँ तित स्याममयी है"—यह सर्वात्मभावकी अवस्था नहीं हो पाती।

परन्तु समय-समयपर रसकी रीति-नीति सिखानेके लिये जो रसिकाचार्य पधारते हैं, उनकी सिद्धावस्था होती है। हाथीके दाँतोंकी तरह सदा उनकी दो अवस्थाएँ होती हैं—स्वरूपावेश और बाह्य आवेश। व्यवहार मात्रके लिये उनकी बाह्य अवस्था होती हैं। वे वस्तुतः इस जगत्में दीखते हुए भी धाममे ही नित्य निवास करते हैं। स्वरूपावेशकी अवस्थामे न कोई पुरुष है न स्त्री, न ब्राह्मण-क्षत्रिय आदि वर्ण हैं। केवल शुद्ध-बुद्ध-मुक्तस्वरूप आत्मा है, वह भी परमात्माका अनन्यार्ह भोग्य दास है–"दासभूताः स्वतः सर्वेह्यात्मानः परमात्मनः। नान्यथा लक्षणं तेषां बन्धे मोक्षे च विद्यते।" बद्ध-मुक्त सभी अवस्थाओंमें—यह चेतन श्रीभगवान्‌का दास है। इसी स्वरूपावेशमें पञ्चम पुरुषार्थरूप शृङ्गार रसका आस्वादन होता है। बाह्य आवेशमें अज्ञानवश चेतन अपनेको पुरुष, स्त्री, ब्राह्मण, क्षत्रिय आदि मानता है। उस समय उसे धर्म, अर्थ, काम—इन तीन पुरुषार्थोंका अधिकार होता है, शृङ्गार रसके अनुशीलनकी योग्यता नही होती। वह हृद्रोग-निवारिणी प्रेमरस विस्तारिणी श्रीराधा-कृष्णकी शुचि उज्ज्वल शृङ्गार रसकी लीलाओंसे सदा वञ्चित रहता है। उसे दुर्भाग्यवश ये लीलाएँ काममयी प्रतीत होती हैं। वह दूसरोंसे भी दुराग्रह करता है कि वे शृङ्गार रसकी लीलाओंको न सुनें।

प्रायः इस प्राकृत जगत्मे चेतनोंको अधिकतर 'बाह्य आवेश' सदा रहता है। भाग्यवश यदि चेतनको रसिक गुरुदेव मिल जायें तथा रसमयी उपासना एवं मन्त्र प्राप्त हो जायँ और रसिकोंका सदा सङ्ग मिलता रहे तो 'स्वरूपावेश' हो सकता है।

अतः सच्चे सदाचारी रस-जिज्ञासुओंसे प्रार्थना है कि वे श्रद्धापूर्वक इस "श्रीराधासप्तशती"का अध्ययन करेंगे तो अवश्य इस दिव्य परम पवित्र शृङ्गार रसके मर्मज्ञ रसिक बन जायँगे ; क्योंकि इस ग्रन्थमें इस दिव्य शृङ्गाररस-सम्बन्धी अपेक्षित सभी बातें संक्षेपमें आ गयी हैं।

इस श्रीराधासप्तशती ग्रन्थके संस्कृत श्लोकोंका पूरा अनुवाद पण्डित श्रीरामनारायण दत्तजी शास्त्री 'राम' ने बड़ी ही सुललित तथा सरल भाषामें कर दिया है। इससे इस ग्रन्थके समझनेमें सभीको बड़ी सुविधा हो गयी है। इस पवित्र कार्यके लिये ग्रन्थकार उनका बड़ा कृतज्ञ है।

वागीश शास्त्री
वृन्दावन

श्री राधा-कृष्णाभ्या नमः

# अथ प्रथमोऽध्यायः

## बरसाने में प्रवेश

कीर्त्तियशोदयोर्निजमहावात्सल्यसिन्धूद्भवं
मामृतसिन्धुमग्नमनिशं दिव्याद्‌भुतक्रीडनम् ।
श्चर्यमयं महारसमयं गोप्यैकभावाश्रयं
राध्यं हृदि पीतनीलकमलद्वन्द्वं महामोहनम् ॥१॥

दा और यशोदा—इन दोनो देवियोंके अपने-अपने वात्सल्य-
हुए है, निरन्तर अपने ही पारस्परिक प्रेम-सुधा-सागरमें निमग्न
र अद्‌भुत लीलाओंके आलम्बन है, जिनका स्वरूप सर्वाश्चर्यमय,
महामोहन है, जो गोपीभावमयी मधुर उपासनाके एकमात्र
भक्तजन अपने हृदयमें ही जिनकी सुखपूर्वक आराधना करते
नील कमलों (के सदृश कान्तिवाले प्रिया-प्रियतम) की मैं वन्दना

श्रीसुकण्ठ उवाच

**बृहत्सानुकथां पुण्यां श्यामाश्यामकृपामयीम् ।**
**सर्वात्मतर्पणीं मित्र श्रावयाद्यानुकम्पया ।।२।।**

**श्रीसुकण्ठजी बोले—**

मित्र ! आज कृपा करके श्रीश्यामा-श्यामकी करुणासे भरी हुई श्री बरसानेकी कोई ऐसी पुण्यकथा सुनाओ, जो सभी आत्माओं (आत्मा, मन, और इन्द्रियों) को तृप्त करनेवाली हो ।।२।।

श्रीमधुकण्ठ उवाच

**सखे शृणु कथां पुण्यां मधुरामृतवर्षिणीम् ।**
**वसन्तदेवो विप्रोऽभूत् कश्चिच्छ्रीजाह्नवीतटे ।।३।।**
**कदाचित्तस्य वासाय श्रीवृन्दाविपिने व्रजे ।**
**समुत्कण्ठा समुत्पन्ना सहसा मानसेऽनघे ।।४।।**

**श्रीमधुकण्ठजी ने कहा—**

सखे ! (मैं तुमसे) मधुर अमृतकी वर्षा करनेवाली एक पुण्यमयी कथा (कहता हूँ, उसे) तुम सुनो। श्रीगङ्गाजीके तटपर वसन्तदेव नामसे प्रसिद्ध एक ब्राह्मण थे। उनके निर्मल मनमें किसी समय एकाएक श्रीव्रजधाम एवं श्रीवृन्दावनमें वास करनेकी बड़ी प्रबल उत्कण्ठा उत्पन्न हुई ।।३–४।।

**सोऽतीव विस्मितो विप्रः श्रीकृष्णकृतधीः सुधीः ।**
**विचारमाचरत् कस्मादाविर्भूता रुचिर्मम ।।५।।**

जिसका चित्त सदा श्रीकृष्णके ही चिन्तनमें लगा रहता था, वह सुन्दर बुद्धिवाला ब्राह्मण अत्यन्त विस्मित होकर सोचने लगा कि 'मुझमें ऐसी इच्छा अकस्मात् कैसे उत्पन्न हो गयी ? ।।५।।

**व्रजे वृन्दावने वापि ब्रह्माद्यैरपि दुर्लभे ।**
**वासे मनोरथोऽयं मे स्वप्नमायेव लक्ष्यते ।।६।।**

'श्रीव्रज अथवा श्रीवृन्दावन तो ब्रह्मा आदि देवताओंके लिये भी दुर्लभ है, उसमें वास करनेके निमित्त यह मेरा मनोरथ स्वप्न और मायाके समान लक्षित होता है ।।६।।

**कोटिजन्मसमुत्थेन पुण्येनापि सुदुर्लभा ।**
**वृन्दाटवी महापुण्या राधामाधववल्लभा ॥७॥**

'श्रीराधा-माधवकी परम प्यारी महापुण्यमयी श्रीवृन्दावन-स्थली कोटि जन्मोंमें उपार्जित पुण्योंसे भी अत्यन्त दुर्लभ है' ॥७॥

**एवं चिन्तयतस्तस्य व्यतीतं माससप्तकम् ।**
**द्विगुणा च तदुत्कण्ठा जाता वृन्दावनं प्रति ॥८॥**

इस प्रकार चिन्ता करते-करते ब्राह्मणके सात मास बीत गये और वृन्दावनके लिये उनके मनमें दूनी उत्कण्ठा हो गयी ॥८॥

**प्रत्यहं स्वेष्टदेवस्य गोपालस्य पदाब्जयोः ।**
**प्रार्थयन्नपि न प्राप सान्त्वनां वा सदुत्तरम् ॥९॥**

इसके लिये वे प्रतिदिन अपने इष्टदेव श्रीगोपालके पादपद्मोंमें प्रार्थना करते थे ; परंतु उन्हें कोई सान्त्वना या संतोषजनक उत्तर नहीं मिला ॥९॥

**तदा चिन्तापरीतात्मा गङ्गातटमुपागतः ।**
**वृन्दाटवीनिवासाय किमत्र क्रियतामिति ॥१०॥**

तब वे ब्राह्मण (घर छोड़कर) गङ्गाजीके तटपर आये और विचार करने लगे कि 'मुझे श्रीवृन्दावनकी प्राप्तिके लिये इस समय कौन-सा साधन करना चाहिये ?' इस चिन्तासे वे अत्यन्त व्याकुल हो गये ॥१०॥

**गोपाललीला काप्येषा प्रलुब्धं मानसं यया ।**
**एवं चिन्तयता तेन श्रीमद्भागवतं तदा ॥११॥**
**पठता दिवसा नीताः गोपालप्रियकाम्यया ।**
**गङ्गातीरकृतावासान् विरक्तान् साधुसत्तमान् ॥१२॥**
**प्रणिपत्यातिदैन्येन पप्रच्छात्ममनोरथम् ।**
**किं करोमि यतो वृन्दाटवीवासमवाप्नुयाम् ॥१३॥**

'यह तो कोई श्रीगोपालकी लीला है, जिसने मेरे मनमें श्रीवृन्दावनके लिये प्रबल लोभ उत्पन्न कर दिया है ।' यह सोचकर उन्होंने गोपालकी प्रसन्नताके लिये श्रीभागवतका पाठ आरम्भ कर दिया । पाठ करते हुए जब उन्हें कई दिन बीत गये, तब (वे अधीर होकर) एक दिन श्रीगङ्गातीरवासी बडे-बडे विरक्त

साधुओंके पास गये और अतिदीन भावसे प्रणाम करके उन्होंने उनसे अपने मनोरथ (की सफलता) के लिये प्रश्न किया—'महात्माओ! मुझे कौन-सा साधन करना चाहिये, जिससे श्रीवृन्दावनवासकी प्राप्ति हो जाय? ॥११, १२, १३॥'

**भवन्तः शरणं सर्वे मज्जतो नौरिवार्णवे।**
**उपायं कृपयामोघं प्रब्रूतामोघदर्शनाः ॥१४॥**

'जैसे समुद्रमें डूबनेवाले मनुष्यको बचानेके लिये नौका ही सबसे बड़ा सहारा है, उसी प्रकार आप सब लोग (इस भवसागरसे उबारनेके लिये) मेरे महान् आश्रय हैं। (मुझ शरणागतपर) कृपा करके कोई अमोघ (अवश्य फल देने वाला) उपाय बतायें; क्योंकि आप-जैसे महात्माओंका दर्शन कभी निरर्थक नहीं होता (उससे मनोवाञ्छित फलकी सिद्धि अवश्य होती है)' ॥१४॥

**सर्वेऽपि तमिदं प्रोचुर्गृहे तिष्ठ गृहाश्रमी।**
**भज तत्रैव गोपालं पालयस्व गृहाश्रमम् ॥१५॥**
**वृन्दाटव्यास्तु गेहे त्वं भावनां कुरु सर्वदा।**
**तेषां वचनमाकर्ण्य कर्णशूलकरं द्विजः ॥१६॥**
**पार्श्वतोऽपासरत्तेषां मृगो व्याधभयादिव।**
**ततो ययौ कर्णवासं तीर्थं सिद्धनिषेवितम् ॥१७॥**

(यह सुनकर) सभी महात्मा उसे यह कहने लगे—'अरे! तू गृहस्थ है, घरमें ही रहकर गृहाश्रमका पालन तथा गोपालका भजन किया कर और अपने घरमें ही वृन्दावनकी नित्य भावना कर लिया कर।' ब्राह्मणको उनकी यह बात कानोंमें शूलके समान असह्य पीड़ा देनेवाली लगी। उसे सुनकर व्याधोंके भयसे डरे हुए मृगके समान वे उन सबके पाससे भाग चले और सिद्ध-सेवित (परम पावन) कर्णवास नामक तीर्थमें जा पहुँचे ॥१५-१७॥

**तत्र साधून् विरक्तांश्च भक्तान् दृष्ट्वा मुदं ययौ।**
**तेषां च परमाराध्यं गुरुं शंकररूपिणम् ॥१८॥**
**यतिराजमथावोचन्निपत्य पदकंजयोः।**
**भगवन्मे परोत्कण्ठा वृन्दारण्यसुखाप्तये ॥१९॥**
**जाता तत्रैव वासाय प्राणा व्याकुलिता यथा।**
**तत्ते शरणमायातः कृपयाऽऽज्ञां प्रदेहि मे ॥२०॥**

वहाँ साधुओं, विरक्तों, और भक्तोंको देखकर वे (बहुत) प्रसन्न हुए। वहाँ उन सबके परमपूज्य गुरु शिवस्वरूप एक यतिराज विराजमान थे। उनके श्रीचरणोंमें प्रणाम करके ब्राह्मण कहने लगे—'भगवन्! मेरे मनमें श्रीवृन्दावन-वास-जनित सुखकी प्राप्तिके लिये बड़ी उत्कण्ठा उत्पन्न हो गयी है, जिसने उसी वृन्दावनमें निवास करनेके लिये मेरे प्राणोंको व्याकुल कर दिया है। इसलिये मैं आपकी शरणमें आया हूँ। आप कृपा करके मुझे श्रीवृन्दावनमें जानेकी आज्ञा दे दीजिये' ॥१८, १९, २०॥

**तेनापि सहसा प्रोक्तं तत्र वासोऽतिदुष्करः।**
**ये दोषदर्शिनो धाम्नि वासादपि पतन्ति ते ॥२१॥**

यह सुनकर यतिराजने भी सहसा यही उत्तर दिया कि—'श्रीवृन्दावनमें वास करना बहुत कठिन कार्य है। धाममें रहनेपर भी जो उसके दोष देखने लगते है, वे पतित हो जाते हैं' ॥२१॥

**परं विप्रप्रतोषाय पद्यमेकं जगौ मुदा।**
**शाकपत्रादने तुष्टा ये वृन्दावनवासिनः ॥२२॥**
**तेषां भाग्यमहो दृष्ट्वा स्पृहयन्ति ह्यजादयः।**
**श्रुत्वतद् गन्तुकामाय वृन्दारण्यं द्विजाय सः ॥२३॥**
**एलालवङ्गपूग्यादिप्रसादं प्रददौ स्वयम्।**
**त्वरावानथ विप्रोऽसौ निशायामेव प्रस्थितः ॥२४॥**

परंतु ब्राह्मणके संतोषार्थ उन्होंने (बड़े) हर्षसे एक श्लोकका गान किया, जिसका भाव यह है—'जो साग-पातके आहारसे संतुष्ट रहते हुए श्रीवृन्दावनमें वास करते हैं, उनके आश्चर्यमय भाग्यको देखकर ब्रह्मा आदि देवेन्द्र भी ललचाते है।' यह सुनकर ब्राह्मणके मनमें श्रीवृन्दावनमें जानेकी इच्छा जाग उठी। तब श्रीयतिराजने स्वयं प्रसादके रूपमें उन्हें इलायची, लौंग और पूगीफल (सुपारी) आदि दिये। ब्राह्मण वहाँ जानेके लिये उतावले हो उठे थे। अतः उन्होंने रात्रिमें ही प्रस्थान कर दिया ॥२२, २३, २४॥

**याचे श्रीनन्दगोपालं स्वयं वृन्दावनस्थितिम्।**
**एवं संकल्प्य वेगेन तमेवानुस्मरन्ययौ ॥२५॥**

वे मन-ही-मन यह सकल्प करके कि 'अब स्वयं श्रीनन्दगोपालसे श्रीवृन्दावन-वासके लिये प्रार्थना करूँगा' श्रीगोपालका ही स्मरण करते हुए बड़े वेगसे आगे

अथ गङ्गातटाद्विप्रः प्राप्तः श्रीयमुनातटम् ।
तत्र स्नात्वा च देवर्षीन् पितॄन् संतर्प्य सत्वरम् ॥२६॥
गमनाय मतिं चक्रे श्रीमद्वृन्दावनं प्रति ।
व्योमवाणी तदैवासीद् वृहत्सानुमितो व्रज ॥२७॥
भविता कार्यसंसिद्धिः श्रीराधाचरणान्तिके ।
गोपालो नानुकूलस्तेऽधुना विप्रेति चिन्त्यताम् ॥२८॥

अब ब्राह्मण श्रीगङ्गा-तटसे श्री यमुना-तटपर जा पहुँचे। वहाँ स्नान करके उन्होंने शीघ्रतापूर्वक देवताओं, ऋषियों और पितरोंका तर्पण किया। फिर श्रीवृन्दावनमें जानेका विचार किया। इतनेमें ही आकाशवाणी हुई—"ब्राह्मण ! यहाँसे बरसाने जाओ। वहाँ श्रीराधाके चरणोंके निकट (जानेपर) तुम्हारे कार्यकी सिद्धि होगी। श्रीगोपालजी इस समय तुम्हारे अनुकूल नहीं हैं। इस बातपर विचार करो" ॥२६, २७, २८॥

श्रुत्वैतद्विस्मितो विप्रो वाण्या अर्थमचिन्तयत् ।
नूनं मां प्रत्युदासीनो गोपालो मम भाग्यतः ॥२९॥
महाकारुणिको वा मे परिहासं करोत्यसौ ।
सदा कौतुकिनस्तस्य कर्तव्यं केन ज्ञायताम् ॥३०॥

यह सुनकर ब्राह्मण विस्मित हो उस आकाशवाणीके अर्थपर विचार करने लगे (और मन-ही-मन बोले)—'निश्चय ही मेरे दुर्भाग्यसे श्रीगोपालजी मेरे प्रति उदासीन हो गये हैं। अथवा वे तो परम दयालु हैं। सम्भव है मुझसे परिहास करते हों। सदाके कौतुकी श्रीकृष्ण कौन कार्य किस अभिप्रायसे करते हैं—यह कौन समझ सकता है ॥२९-३०॥

व्यतीताः कतिचिन्मासा नाशृणोन्मम प्रार्थितम् ।
निवेद्यमेतद् गत्वैव वृषभानुसुतान्तिके ॥३१॥
तदाज्ञया तु गोपालो मां दीनं कृपयिष्यति ।
इति संचिन्तयन्विप्रो वृषभानुपुरं ययौ ॥३२॥

'कई मास बीत गये, मेरी प्रार्थना उन्होंने नहीं सुनी—यह बात तो मुझे श्रीवृषभानुनन्दिनीके (परमोदार) दरबारमें जाकर निवेदन करनी ही चाहिये ; उनकी आज्ञासे श्रीगोपालजी मुझ दीनपर अवश्य कृपा करेंगे।' यह सोचते-विचारते हुए वे ब्राह्मण चल दिये ३१ ३२

